त्वम्, अहम्। युष्माम्, अस्माम्—विभक्तिपरत्वेऽपि युवावौ प्रकृत्योर्द्व्यर्थत्वाभावान्न भवतः। यूयम्, वयम्। युषाम्, असाम्। युष्मान्, अस्मान्। युष्या, अस्या। युषाभ्याम्, असाभ्याम्। युषाभिः, असाभिः। तुभ्यम्, मह्यम्। युषाभ्याम्, असाभ्याम्। युषभ्यम्, असभ्यम्–'भ्यसोऽभ्यम्' इति अभ्यमादेशपक्षे इदं रूपम्। अन्यदा शेषेलोपे पदकार्ये जश्त्वादौ युड्भ्यम् अड्भ्यमिति भाव्यम्। युषत्, असत्। तव, मम। युष्योः, अस्योः। युषाकम्, असाकम्। युष्यि, अस्यि। युष्योः, अस्योः। युषासु, असासु॥ युवामाचष्टे आवामाचष्टे इति णौ क्वौ णेश्च लोपे विभक्तौ पूर्ववत् 'प्रत्ययोत्तरपदयोश्च' इति त्वमयोः युष्मदस्मदोरेकार्थत्वाभावादभावः, अस्ति द्व्यर्थत्वं विभक्तिपरत्वं चेति युवावौ भवतः। तत्र 'यूयवयौ जसि' इत्यादियोगचतुष्टयविषये परत्वाद्यूयवयादयो भवन्ति। अत्र रूपाणि—त्वम्, अहम्। युवाम्, आवाम्। यूयम्, वयम्। युवान्, आवान्। युवया, आवया। युवाभ्याम्, आवाभ्याम्। युवाभिः, आवाभिः। तुभ्यम्, मह्यम्। युवाभ्याम्, आवाभ्याम्। युवत्, आवत्। युवाभ्याम्, आवाभ्याम्। युवत्, आवत्। तव, मम। युवयोः, आवयोः। युवाकम्, आवाकम्। युवयि, आवयि। युवयोः, आवयोः। युवासु, आवासु। विभक्त्यादेशादि पूर्ववत्॥ त्वामाचष्टे मामाचष्टे इति णौ 'प्रत्ययोत्तरपदयोश्च' इति त्वमयोः 'प्रकृत्यैकाच्' इति प्रकृतिभावाट्टिलोपाभावे णेश्च क्वौ लोपे त्वाद् माद् इति भवतः। अङ्गवृत्तपरिभाषया वृद्धिर्नेति वादिनां त्वद् मद् इति भवतः। तत्र विभक्तिषु मपर्यन्तत्वाभावाद्यूयादयो न भवन्ति। अत्र रूपाणि—आदितः पञ्चसु वचनेषु त्वाम् माम् इति। वृद्धिर्नेतिवादिनां सुजसोः शेषेलोपेन दकारलोपे त्वम्, मम् इति भवतः। त्वान्, मान्। त्वाया, माया। अवृद्धिपक्षे—त्वया, मया। त्वाभ्याम्, माभ्याम्। त्वाभिः, माभिः। एवं 'ङे प्रथमयोरम्' इत्यमि शेषेलोपे 'आतो धातोः' इत्याकारलोपः। त्वाम्, माम्। त्वाभ्याम्, माभ्याम्। भ्यमादेशे पूर्ववच्छेषेलोपे त्वाभ्यम्, माभ्यम् इति भवति। पूर्ववल्लोपे, अभ्यमादेशपक्षे आल्लोपे च त्वभ्यम्, मभ्यम् इति भवति। अवृद्धिपक्षे शेषेलोपे त्वभ्यम्, मभ्यम्। अङ्गवृत्तपरिभाषया 'बहुवचने झल्येत्' इत्येत्वं न भवति। त्वत्, मत्—पूर्ववच्छेषेलोपाल्लोपौ। त्वाभ्याम्, माभ्याम्। त्वत्, मत्। त्व, म—पूर्ववच्छेषेलोपाल्लोपौ। त्वायोः, मायोः। अवृद्धिपक्षे त्वयोः, मयोः। त्वाकम्, माकम्। त्वायि, मायि। त्वायोः, मायोः। अवृद्धिपक्षे—त्वयि, मयि इत्यादि। त्वासु, मासु। अत्र येषां दर्शनम् 'णौ त्वमयोः परपूर्वत्वात् पूर्वमनेकाच्त्वेन टिलोपे वृद्धौ पुकि क्वौ णेर्लोपे त्वापि मापि इति भवतः' इति, तेषामपि पूर्ववत् शेषेलोपादिषु वृद्धिपक्षे यानि रूपाणि तानि द्रष्टव्यानि। ननु युष्मदस्मदोर्मान्तित्वे कथं यूयादयः प्रदर्शिताः, यतस्ते 'मपर्यन्तस्य' इत्यधिकारे विधीयन्ते, 'मपर्यन्तस्य' इति च युष्मदस्मद्भ्यां वैयधिकरण्येन सम्बध्यते,

'व्यपदेशिवद्भावश्चाप्रातिपदिकेन' इति प्रतिषिध्यते; अवश्यं चैतदेवं विज्ञेयम्, सामानाधिकरण्येन सम्बन्धे मान्तयोरादेशप्रसङ्गात्; उच्यते, अत्र मान्तस्येति वचनेनाप्युक्तेऽर्थे सिद्धे परिग्रहणसामर्थ्यात् अप्रातिपदिकेनेत्यस्याप्रवृत्तेः, व्यपदेशिवद्भावसिद्धेः। अपरे पुनराहुः—'सति शेषे पर्यन्तशब्दो वर्तते, तेन मान्तयोः युष्मदस्मदोर्यूयाद्यादेशेन न भवितव्यम्' इति, तन्मते पूर्वं 'यूयवयौ जसि' इत्यादि-योगचतुष्टयस्याप्रवृत्तेर्यूयवयाद्यादेशाभावः । तत्र रूपाणि—युषम्, असम्—'ङे प्रथमयोरम्' इत्यमि 'शेषे लोपः' इत्यन्तलोपः। सुजसोर्द्विवचने तु 'प्रथमायाश्च द्विवचने' इत्यात्वम्—युषाम्, असाम्। चतुर्थ्येकवचने तुभ्यमह्यादेशाभावात् 'ङे प्रथमयोरम्' इत्यमि शेषेलोपे—युषम्, असम्। षष्ठ्येकवचने 'युष्मदस्मद्भ्यां ङसोऽश्' इति अशादेशे 'तवममौ ङसि' इति तवममयोरभावे शेषेलोपे युष्, अस् इति भवति। इदं च शेषेलोपप्रदर्शनं 'शेषे लोपः' इत्यस्य शेषे विभक्तौ पर इत्यर्थपक्षे। यदा तु 'मात् परत्वं शेषत्वम्' इति पक्षस्तदा शेषेलोपाभावान्मकारस्य श्रवणं भवतीति युष्मम् अस्मम् इत्यादि भवति।

इति श्रीसायणेन विरचितेयं
प्रत्ययान्तनामधातुवृत्तिः समाप्ता।

❀ शुभं भवतु ❀

* समाप्तोऽयं ग्रन्थः *

# प्रथमं परिशिष्टम्

## ग्रन्थाश्च ग्रन्थकर्तारः सायणेन स्मृता इमे

# द्वितीयं परिशिष्टम्

## इमे सायणव्याख्याता धातवः साक्षरक्रमाः ।
## धातुरर्थः पाठभेदः गणः सूत्रं क्रमादिह ॥

1. 'स्थुड' इत्युचितः पाठः ।

---

# तृतीयं परिशिष्टम्

## धातुवृत्ताविमे तावद्व्याख्याताः सौत्रधातवः

# चतुर्थं परिशिष्टम्

## इमे वर्णक्रमेणेह कण्ड्वादिगणधातवः

अगद् नीरोगत्वे ३४
अम्बर् प्रभूतभावे [पा] ३९
अररु क्रूरकर्मणि १६
असु उपतापे ४
इरज् ईर्ष्यायाम् [पा] ६
इरञ् ईर्ष्यायाम् ६
इरञ् दीप्तौ [पा] ६
इरञ् मार्गोपस्थापनार्थे [पा] ६
इयस् ऐश्वर्ये ७
इरस् ईर्ष्यायाम् [पा] ६
इषुध शरधारणे १९
उरस् बलार्थः ३६
उषस् प्रभातभावे ८
एला विलासे २५
कण्डूय गात्रविघर्षणे १
कुषुभ क्षेपे ११
केला विलासे २५
खेला विलासे २५
खेला सत्त्वचलने च [पा] ३५
गद्गद वाक्स्खलने २४
चरण गतौ २०
चुरण चौर्ये २१
तन्तस् दुःखे १३
तिरस् अन्तर्धौ ३३
तिषज् उपसेवायाम् १८
तुरण त्वरायाम् २२
दुःख तत्क्रियायाम् १४
द्रवस् परितापपरिचरणयोः ३१
पम्पस् दुःखे १३
पूर्व भावे स्वप्ने च [पा] ५
भिषज् चिकित्सायाम् १७
भुरण धारणपोषणयोः २३
मगध नीचदास्ये [पा] १२
मगध परिवेष्टने १२
मनस् उपतापे ४
मन्तु अपराधे २
महीङ् पूजायाम् ३०
मेधा आशुग्रहणे १०
रेखा श्लाघासादनयोः ३१
लाट् जीवने २८
लिट् अल्पार्थे कुत्सायां च २७
लेख स्खलने च [पा] २६
लेखा ३५
लेखा स्खलने च २६
लेट प्रभूतभावे [पा] ३९
लेट् धौर्त्ये पूर्वभावे स्वप्ने च ५
लेला दीप्तौ [पा] ५
लोट प्रभूतभावे [पा] ३९
लोट् धौर्त्ये पूर्वभावे स्वप्ने च ५
वरण गतौ [पा] २०
वल्गु पूजामाधुर्ययोः ३
वेद धौर्त्ये स्वप्ने प्रभाते च ९
सपर पूजायाम् १५
सम्बर् प्रभूतभावे [पा] ३९
सम्भूयस् प्रभूतभावे ३९
सुख तत्क्रियायाम् १४
हृणीङ् रोषणे लज्जायां च २९

# पञ्चमं परिशिष्टम्

## सूचीयं नामधातूनां सहिता पृष्ठसङ्ख्यया